# श्रीस्वामिनारायणीयाक्षरपुरुषोत्तमदर्शनभाष्ये पाणिनीयसंवादः

DR. PANKAJ KUMAR VYAS
Associate Professor, Department of Vyākaraṇa
National Sanskrit University, Tirupati (Andhra Pradesh)

**सारांशः**

अथैदानीं श्रीस्वामिनारायणप्रबोधिताक्षरपुरुषोत्तमदर्शनीयस्य श्रीप्रमुखस्वामिजीमहाराजाज्ञया साधुश्रीभद्रेशदासस्वामिभिः प्रणीतस्य प्रस्थानत्रयीभाष्यस्य पाणिनीयमिति प्रथितस्य मुनित्रयोक्तशब्द-शास्त्रीयसिद्धान्तपथमनुसृत्यैव तत्र-तत्र स्वसिद्धान्तोपस्थापने उपोद्बलकतया मुनित्रयोक्तेरुपन्यासेन प्रवर्तितत्वात्प्रकृतोऽयं लेख उपन्यस्तपाणिनीयप्रमाणानि कथं स्वामिनारायणभाष्यस्थानंशानु-पोद्बलयन्तीति मीमांसायां प्रारभ्यते। तत्र ब्रह्मसूत्र-दशोपनिषद्-गीताभाष्ये सन्ति बहूनि स्थलानि यत्र पाणिनीयसंवादोऽसकृत् कृतो वर्तते तत्तत्सूत्रव्याख्याने उपनिषद्वाक्यविवृतौ गीतोपनिषदर्थपर्यालोचने च। अनेन प्रस्थानत्रयीभाष्यप्रणयनावसरे आचार्याः साधुभद्रेशदासस्वामिनः स्वोक्तार्थस्य निर्णयाय, सङ्गतये व्युत्पत्तिविग्रहादिप्रदर्शनवेलायाञ्च तत्र तत्र पाणिनीयसंवादेन शास्त्रे वदन्ते नान्यत्र विवदन्ते इति सुवचम्। एतच्च लेखनेनानेनाग्रे स्फुटीभविष्यति।

नह्यत्र नैकशास्त्रविदामाचार्याणां शास्त्रप्रमाणैः प्रमाणितस्य भाष्यस्य पुनरपि प्रमाणयितुं काचिद् विधित्सा वर्तते "स्वयं प्रमाणस्य कुतः परीक्षा" इति न्यायेन। यथा वा सिद्धस्यापि विषयस्य प्रमाणान्तरैः पुनस्साधनेन[१] दृढीकरणम्, तथैव प्रकृतप्रस्थानत्रयीभाष्ये प्रदर्शितपाणिनीयसंवादस्य यथायथं प्रस्तावेन भाष्योक्तिषु कल्पितानामर्थानां पक्षे सप्रमाणत्वकथनेन निष्प्रमाणत्वोक्तिनिरासः, क्वचित्तु प्रदर्शितप्रमाणानां संक्षेपेण विवरणाद् व्याख्यासापेक्षत्वात् क्व तात्पर्यमिति प्रदर्शनञ्च विषयोऽत्र प्रवर्तनायाम्। अनेन मूलोक्तेरेव पुनरत्रापि प्रस्तावात् पुनरुक्तमिति निरस्यते। अनैनेव च प्रकृतस्यास्य पाणिनीयप्रमाणोक्तीनां प्रकृतभाष्यसन्दर्भे उपोद्बलकत्वस्य प्रतिपिपादयिष्यमाणत्वात् समूलत्वमपूर्वत्वं सिद्धसाधनदोषरहितत्वमपि ध्वन्यत इति सविनयं विज्ञप्तिरेषा।

१. "प्रत्यक्षदृष्टमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः।" (श्रीमद्गङ्गेशोपाध्यायः ९७७)

**Keywords**
अक्षरब्रह्म, पुरुषोत्तमब्रह्म, दर्शनम्, ब्रह्मसूत्राणि, श्रीमद्भगवद्गीता, अक्षरपुरुषोत्तमदर्शनम्, भाष्यम्, ब्रह्मजिज्ञासा, जगत्कारणम्, उपादानम्, निमित्तम्, आनन्दमयः, अनादि, भूमा, तद्गुणसंविज्ञानो बहुव्रीहिः, पाणिनीयम्

## पूर्वभूमिका

अथैदानीं श्रीस्वामिनारायणप्रबोधिताक्षरपुरुषोत्तमदर्शनीयस्य श्रीप्रमुखस्वामिजी-महाराजाज्ञया साधुश्रीभद्रेशदासस्वामिभिः प्रणीतस्य प्रस्थानत्रयीभाष्यस्य पाणिनीयमिति प्रथितस्य मुनित्रयोक्तशब्द-शास्त्रीयसिद्धान्तपथमनुसृत्यैव तत्र-तत्र स्वसिद्धान्तोपस्थापने उपोद्बलकतया मुनित्रयोक्तेरुपन्यासेन प्रवर्तितत्वात्प्रकृतोऽयं लेख उपन्यस्तपाणिनीयप्रमाणानि कथं स्वामिनारायणभाष्यस्थानंशानुपोद्बलयन्तीति मीमांसायां प्रारभ्यते। तत्र ब्रह्मसूत्र-दशोपनिषद्-गीताभाष्ये सन्ति बहूनि स्थलानि यत्र पाणिनीयसंवादोऽसकृत् कृतो वर्तते तत्तत्सूत्रव्याख्याने उपनिषद्वाक्यविवृतौ गीतोपनिषदर्थपर्यालोचने च। अनेन प्रस्थानत्रयीभाष्यप्रणयनावसरे आचार्याः साधुभद्रेशदासस्वामिनः स्वोक्तार्थस्य निर्णयाय, सङ्गतये व्युत्पत्तिविग्रहादिप्रदर्शनवेलायाञ्च तत्र तत्र पाणिनीयसंवादेन शास्त्रे वदन्ते नान्यत्र विवदन्ते इति सुवचम्। एतच्च लेखनेनानेनाग्रे स्फुटीभविष्यति।

नह्यत्र नैकशास्त्रविदामाचार्याणां शास्त्रप्रमाणैः प्रमाणितस्य भाष्यस्य पुनरपि प्रमाणयितुं काचिद् विधित्सा वर्तते "स्वयं प्रमाणस्य कुतः परीक्षा" इति न्यायेन। यथा वा सिद्धस्यापि विषयस्य प्रमाणान्तरैः पुनस्साधनेन[२] दृढीकरणम्, तथैव प्रकृतप्रस्थानत्रयीभाष्ये प्रदर्शितपाणिनीयसंवादस्य यथायथं प्रस्तावेन भाष्योक्तिषु कल्पितानामर्थानां पक्षे सप्रमाणत्वकथनेन निष्प्रमाणत्वोक्तिनिरासः, क्वचित्तु प्रदर्शितप्रमाणानां संक्षेपेण विवरणाद् व्याख्यासापेक्षत्वात् क्व तात्पर्यमिति प्रदर्शनञ्च विषयोऽत्र प्रवर्तनायाम्। अनेन मूलोक्तेरेव पुनरत्रापि प्रस्तावात् पुनरुक्तमिति निरस्यते। अनैनेव च प्रकृतस्यास्य पाणिनीयप्रमाणोक्तीनां प्रकृतभाष्यसन्दर्भे उपोद्बलकत्वस्य प्रतिपिपादयिष्यमाणत्वात् समूलत्वमपूर्वत्वं सिद्धसाधनदोषरहितत्वमपि ध्वन्यत इति सविनयं विज्ञप्तिरेषा।

अत्र ये विषयाः स्थालीपुलाकन्यायेन विचार्यन्ते त इत्थं वर्तन्ते। तथा हि – "अथातो ब्रह्मजिज्ञासा" इति सूत्रे ब्रह्मणोर्जिज्ञासा इति द्विवचनान्तेन विग्रहसङ्गतिः, ब्रह्मणोरिति कर्मणि षष्ठी न तु शेषषष्ठी विशेषाभिधानात् प्रतिपदविधाननिषेधनिवारणाच्चेति, ब्रह्मशब्दव्युत्पत्तिप्रदर्शनेन ब्रह्मशब्दोयमक्षर-पुरुषोत्तमब्रह्मणी शक्त इति समन्वयः, "जन्माद्यस्य यतः" इत्यत्र इदं-यद्भ्यां सर्वनामभ्यां जगद्-ब्रह्मणोः परामर्शः, यत इति याभ्यामिति पञ्चमीद्विवचनोपपत्तिः, यत इति हेत्वर्थे पञ्चमी हेतुत्वञ्च निमित्तोपादानसाधारणमिति, "तत्तु समन्वयात्" इत्यत्र तच्छब्दो

२. "प्रत्यक्षदृष्टमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिकाः।" (श्रीमद्गङ्गेशोपाध्यायः ९७७)

जगत्कारणपरः, "आनन्दमयोऽभ्यासात्" इत्यत्र मयट् प्राचुर्यार्थे, "भूमा संप्रसादादध्युपदेशात्" इत्यत्र भूमशब्दवाच्यं परं ब्रह्म, अनादिमत्परं ब्रह्म इत्यत्र अनादि मत्परम् इति च्छेदे तात्पर्यम् इति। तत्रादौ –

## अथातो ब्रह्मजिज्ञासा १-१-१

तत्र "अथातो ब्रह्मजिज्ञासा"[३] इति आद्यं ब्रह्मसूत्रं व्याचक्षाणाः स्वामिनारायणभाष्यकाराः – "ब्रह्मजिज्ञासा ब्रह्मणोर्जिज्ञासेति कर्मषष्ठ्या विग्रहो विशेषाभिधानात् प्रतिपदविधाननिषेधनिवारणाच्च।

अथ ब्रह्मपदार्थनिर्णयः। ब्रह्मशब्देनेह सकलवेदान्तोदितब्रह्मविद्यातत्त्वनिरूपणनिपुणेन भगवता व्यासेनाऽक्षरब्रह्मपरब्रह्मेतिदिव्योभयतत्त्वयोर्जिज्ञास्यमानत्वेन विवक्षितत्वात्, तथैव श्रुत्यवबोधितत्वाच्च ब्रह्मणोरिति द्विवचनान्तो विग्रहः। पदार्थभेदेऽपि पदसारूप्याच्चैकशेषः शाब्दिकसमयसिद्धो यथा पार्थपार्थसारथ्युभयविवक्षया कृष्णाविति भारते (म. भा. आदि. प. २२१.३३) दाशरथिवासुदेवाऽग्रजोभय-विवक्षया वदन्ति लोके रामयोरिति तथेहापि। ब्रह्म च ब्रह्म चेति ब्रह्मणी तयोरिति लौकिको विग्रहः। तत्राऽऽद्यं शक्त्याऽक्षरतत्त्वं द्वितीयञ्च पुरुषोत्तमतत्त्वं ब्रवीतीति भवति तदुभयलाभः। तथा ह्येतयोरेव नित्यं स्वरूपस्वभावगुणतश्च सकलजीवेश्वरमायातन्मुक्तेभ्यो बृहत्त्वाद् बृंहणत्वाच्च मुख्यवृत्त्यैव ब्रह्मशब्दव्यपदेशः"[४] प्रतिपादयन्ति।

**अत्रेयं पाणिनीयदिशा विचारणा** – प्रकृतसूत्रे भाष्ये श्रीस्वामिनारायणभाष्यकाराः व्याकरणसम्बद्धान् त्रीन् विषयान् प्रस्तुवन्ति। तथा हि – १) ब्रह्मणोर्जिज्ञासा इत्यत्र षष्ठीद्विवचनान्तेन समासविग्रहप्रदर्शनम्, २) कर्मषष्ठ्या समासः ३) ब्रह्मशब्दव्युत्पत्तिश्चेति।

### ब्रह्मणोर्जिज्ञासा इति द्विवचनघटितविग्रहविचारः

तत्राद्य इदं वक्तव्यं यद् - ब्रह्मजिज्ञासेत्यत्र प्रायः सर्वेऽपि शास्त्रकृतो ब्रह्मणो जिज्ञासेति षष्ठ्येकवचनान्तेन ब्रह्मशब्देन विग्रहं प्रदर्शयन्ति, परमत्र अक्षरब्रह्मपरब्रह्मेति द्वयोस्तत्त्वयोर्विवक्षणाद् द्विवचनान्तेन यद् विग्रहप्रदर्शनं तद् युक्तियुक्तं न वेति चेद् व्याकरणदिशा न किञ्चिद् बाधकं तत्र पश्यामः। यतस्समासे वृत्तौ वा संख्यावगमो न भवति तस्य वाक्याधीनत्वाद् वाक्यस्य च विवक्षाधीनत्वात्। राजपुरुष इत्यत्र राज्ञः, राज्ञोः, राज्ञां वा पुरुष इति यथाविवक्षं विग्रहस्य वक्तुं शक्यत्वाद् यथा। अत एव "समर्थः पदविधिः"[५] इति सूत्रे

---

३. (ब्र. सू. १.१.१) (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ३)

४. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ४)

५. (पा. सू. २.१.१) (पाणिनिः १२)

एकार्थीभावफलनिरूपणाधिकरणपरभाष्ये[६] भगवान् पतञ्जलिराह - "संख्याविशेषो भवति वाक्ये – राज्ञः पुरुषः, राज्ञोः पुरुषः, राज्ञां पुरुष इति। समासे न भवति – राजपुरुष इति।" तत्रैव कैयटः[७] संख्याविशेष इति प्रतीकमुपादाय – "वाक्ये उपसर्जनपदानि विभक्त्यर्थाभिधायित्वात् संख्याविशेषयुक्तं स्वार्थं प्रतिपादयन्ति। समासे त्वन्तर्भूतस्वार्थं प्रधानार्थमभिदधतीत्यभेदैकत्व-संख्यां गमयन्ति। संख्याविशेषाणामविभागेनावस्थानमभेदैकत्वसंख्या।। **यथौषधिरसाः सर्वे मधुन्याहितशक्तयः। अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुरिति।** अथवा परित्यक्त-विशेषसंख्यासामान्यमभेदैकत्वसंख्या इत्यादि।" आभ्यां भाष्यकैयटाभ्यां स्पष्टमिदं यद् वाक्ये उपसर्जनबोधकपदानां विभक्त्यन्तत्वेन तदर्थसंख्याविशेषयुक्तार्थबोधकत्वमिति। तेन वाक्ये यथा संख्याया अवगमो भवति न तथा वृत्ताविति। तेन प्रकृतेऽपि उपसर्जनबोधकपदस्य ब्रह्म इत्यस्य षष्ठीद्विवचनान्तत्वेन तदर्थद्वित्वसंख्याविशेषयुक्तार्थबोधकत्वाद् अक्षरब्रह्मपरब्रह्मेत्यनयोर्बोधकत्वे न किञ्चिद् बाधकम्। अतः ब्रह्मणोर्जिज्ञासा ब्रह्मजिज्ञासेति विग्रहप्रदर्शनं सर्वथा युक्तमेव।

न च क्लीबवृत्तेः ब्रह्मपदस्य परब्रह्मणि शक्तत्वाद् ब्रह्मणो जिज्ञासेति एकवचनान्तसमासस्य परब्रह्मविषये पर्यवसानात् कस्याप्यन्यस्य सापेक्षत्वाभावात् सामर्थ्यसत्त्वाच्च समासे बाधकाभावेऽपि ब्रह्मणोर्जिज्ञासेति द्विवचनान्तेन समासे कयोरिति सापेक्षत्वात् "सापेक्षमसमर्थवत्"[८] इति न्यायेन कथमत्र समास इति वाच्यम्। राज्ञः पुरुषः इत्यादौ सर्वत्रापि कस्येत्यादिसापेक्षत्वे प्रदर्शिते क्वापि समासस्यैवासम्भवात्। कस्य राज्ञ इत्याद्याकाङ्क्षायास्तु पूर्ववाक्याद्युपात्तपदार्थेन शान्तत्वाद् विवक्षितपदार्थस्य पूर्वमेव ज्ञातत्वात् तादृशाकाङ्क्षाया एव अनुद्भवाच्च। यद्वा एकवचनान्तेन समासे ब्रह्मशब्दस्य परब्रह्मणि प्रसिद्ध्या कस्य ब्रह्मण इत्यादिरीत्या कस्यापि पदार्थविशेषस्य सापेक्षत्वाभावात् समाससिद्धिः, तथैव प्रकृतेऽपि ब्रह्म च ब्रह्म चेति ब्रह्मणी इति विग्रहप्रदर्शनपरस्वामिनारायणभाष्योक्तरीत्या[९] तत्रैव भाष्ये तत्र तत्र ब्रह्मतत्त्वद्वयविशेषस्य प्रमाणितत्वाद् द्वयोरपि विवक्षितपदार्थयोः प्रसिद्धत्वात् तत्राप्येतादृशाकाङ्क्षाया उद्भवासंभवाच्च समासस्य सुवचत्वाद् नासङ्गतिरिति स्पष्टम्।

## ब्रह्मणोर्जिज्ञासा इत्यत्र कर्मषष्ठ्या समासादिविचारः

अथ द्वितीयं यदुक्तं स्वामिनारायणभाष्ये – ब्रह्मणोर्जिज्ञासेति कर्मषष्ठ्या

---

६. (व्याकरणमहाभाष्यम् द्वितीयं खण्डम् समर्थः पदविधिः सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) द्वितीयो भागः ३२३)

७. (व्याकरणमहाभाष्यम् कैयटे द्वितीयं खण्डम् समर्थः पदविधिः सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) द्वितीयो भागः ३२३-३२४)

८. सापेक्षमसमर्थं भवतीति। (व्याकरणमहाभाष्यम् द्वितीयं खण्डम् समर्थः पदविधिः सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) द्वितीयो भागः ३१८)

९. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ४)

विग्रहो विशेषाभिधानात् प्रतिपदविधाननिषेधनिवारणाच्च।[१०] अत्र चो हेत्वर्थे यतः प्रतिपदविधाननिषेधनिवारणं ततो विशेषाभिधानम् इति। तत्रेत्थं विवृतिः – प्रकृते शेषषष्ठ्या समास उत कर्मषष्ठ्या। कश्चात्र विशेषः? इति चेदुच्यते – शेषषष्ठ्या समासे तु चतुर्थीसमासवद् ब्रह्मणे जिज्ञासा इति तादर्थ्यादिभानाद् अर्थासङ्गतिः। न ह्यत्र ब्रह्मार्था जिज्ञासा ब्रह्मप्राप्तये जिज्ञासा ब्रह्मसम्बन्धिविषयजिज्ञासा वेत्युच्यते किन्तर्हि ब्रह्मविषयिणी जिज्ञासेति। तद्धि कर्मषष्ठ्यन्तेन समासे सत्येव सङ्गच्छते। ब्रह्मणोऽत्र जिज्ञास्यमानपदार्थत्वात्। जिज्ञासाक्रियायाञ्च तस्य कर्मत्वेनैवान्वयस्योचितत्वात्। शेषषष्ठ्यां तु ब्रह्मपदोत्तरषष्ठ्याः को वा शेषार्थ उच्यते? इत्यादौ वक्तव्यम्।[११] एकशतं षष्ठ्यर्था यावन्तो वा आर्थाः यौनाः मौखाः स्रौवाश्चेत्यादि "षष्ठी स्थाने योगा"[१२] इति महाभाष्यरीत्या सत्सु बहुषु अर्थेषु कमपि आर्थिकं सम्बन्धम् उपादाय प्रकृते समासः वक्तव्यः। स च शेषार्थः सम्बन्धिविषयाः तल्लक्षणप्रमाणज्ञानप्राप्त्यादयो भवितुमर्हन्ति। तथा सति ब्रह्मसम्बन्धिविषयाणामेव प्राधान्यमवभासेत, ब्रह्मणस्तु गौणत्वमेव। प्रकृते च ब्रह्मपदेन विवक्षितपदार्थस्यैव ज्ञानेन आप्तुमिष्टतमत्वात् तदेव प्रधानम्। प्रधानत्वञ्चात्र क्रियानिरूपितकर्मत्वात् साक्षात्तत्रान्वयाच्चेति बोध्यम्। शेषषष्ठ्या समासे तु अर्थतो लब्धानां ब्रह्मसम्बन्धिनां जिज्ञासाक्रियायामन्वयात् तेषां प्राधान्यं स्यात् प्रकृतक्रियानिरूपितकर्मत्वात्। शब्दतः साक्षाल्लभ्यमानविषयं त्यक्त्वाऽर्थतो भासमानस्य ग्रहणानौचित्याच्च। किञ्च ज्ञातस्यैव सम्बन्धिपदार्थानां विषये जिज्ञासा भवितुमर्हति, प्रकृते तु ब्रह्मपदार्थ एव न ज्ञातः तर्हि का कथा तद्विषयाणां विषये? एवञ्च प्रधाने ब्रह्मणि ज्ञाते तत्सम्बन्धितविषयाणामपि ज्ञानस्य स्वतः सम्भवाद् ब्रह्मविषयिणी जिज्ञासेति कर्मषष्ठ्यैव समास उचितः। तथैव प्रधानपरिग्रहणेन तदपेक्षितानामर्थतः आक्षेपसिद्ध्या न तद्विषये पृथगुक्तेरपेक्षापि। अनेन स्वामिनारायणभाष्योक्तं विशेषाभिधानादिति कर्मषष्ठ्या समासे प्रदर्शितहेतोरपि सङ्गतिरुक्ता। ब्रह्मणः प्रधानत्वमेव विशेषः तदभिधानमेव तस्मादिति बोध्यम्। अनेनेदमपि स्पष्टं यत् प्राधान्यनिर्णयेऽत्रापि पाणिनीयमेवाश्रितमिति।

**"प्रतिपदविधाननिषेधनिवारणाच्च" इत्यत्र त्वयं विशेषो वक्तव्यः** – तत्र "षष्ठी"[१३] इति सूत्रे भाष्ये[१४] कृद्योगा च षष्ठी समस्यत इति वक्तव्यम्। इध्मप्रवश्चनः, पलाशशातन इत्यादौ समाससाधनाय "कृद्योगा च" इति वार्तिकमारब्धम्। ततः किमर्थमिदमुच्यते? इति

---

१०. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ४)

११. (व्याकरणमहाभाष्यम् प्रथमं खण्डम् षष्ठी स्थाने योगा सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) प्रथमो भागः ४११)

१२. (पा. सू. १.१.४९) (पाणिनिः ०३)

१३. (पा. सू. २.२.८) (पाणिनिः १४)

१४. (व्याकरणमहाभाष्यम् द्वितीयं खण्डम् षष्ठी सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) द्वितीयो भागः ४३०)

प्रश्ने 'प्रतिपदविधाना च षष्ठी न समस्यते' इति वक्ष्यति। तस्यायं पुरस्तादपकर्षः। ततोऽग्रे सर्वा षष्ठी प्रतिपदविधाना शेषलक्षणां वर्जयित्वा। "कर्तृकर्मणोः कृति" इति तु या षष्ठी सा कृद्योगेति इत्येवमुभयोर्भेदं प्रदर्श्य कृद्योगषष्ठ्या समासस्साधितः। ब्रह्मणोर्जिज्ञासेत्यत्रापि "कर्तृकर्मणोः कृति"[१५] इत्यनेन कर्मणि षष्ठी वर्तते। तेन यदि प्रतिपदविधानसमासनिषेधस्य निवारणं (प्रतिप्रसवः) न स्यात् तदा "कर्तृकर्मणोः कृति" इति विहितषष्ठ्याः अपि प्रतिपदविधानात् तस्याश्च समासस्यैव निषिद्धत्वाद् न कथमपि ब्रह्मजिज्ञासेत्यत्र समासोऽपि स्यात्। यदा तु महाभाष्यकारैः कर्मणि षष्ठ्याः कृद्योगत्वात् समासविधानस्य प्रतिप्रसवः कृतः तदा ब्रह्मजिज्ञासेति समासोऽपि सिद्ध इति अत्रापि स्वामिनारायणभाष्यकारैः पाणिनीयस्य प्रमाणत्वं सुष्ठु सङ्गमितम्।

## ब्रह्मपदवाच्ये अक्षरपुरुषोत्तमब्रह्मणी व्युत्पत्तिविशेषबलादिति विचारः

तृतीये तु स्वामिनारायणभाष्ये प्रदर्शितया ब्रह्मशब्दव्युत्पत्त्या अक्षरपुरुषोत्तमयोर्ब्रह्मणोः कथं समन्वय इति विचार्यते। तदुक्तं ब्रह्मपदनिर्वचनसन्दर्भे साधुश्रीभद्रेशदासस्वामिभिः - "तथा ह्येतयोरेव नित्यं स्वरूपस्वभावगुणतश्च सकलजीवेश्वरमायातन्मुक्तेभ्यो **बृहत्त्वाद् बृंहणत्वाच्च** मुख्यवृत्त्यैव ब्रह्मशब्दव्यपदेशः"[१६] इति।

अत्रेयं व्याकृतिचर्चा – ब्रह्मशब्दो वृद्ध्यर्थकाद् 'बृह'[१७] इति 'बृहि'[१८] इति धातोर्वा निष्पद्यते। बर्हति बृंहति = वर्धयति प्रजा इति ब्रह्म। अन्तर्भावितण्यर्थः। 'बृंहेर्नोऽच्च'[१९] इति मनिन्। धातोर्नस्यादादेशः। तेन ब्रह्मन् इति प्रातिपदिकं सिध्यति ततो विभक्त्यादिकार्याणि ब्रह्म इति रूपम्।

ननु अन्तर्भावितण्यर्थगर्भितव्युत्पत्त्या ब्रह्मशब्देन हिरण्यगर्भस्य चतुर्मुखब्रह्मण एव वाच्यत्वसम्भवः। वर्धयति प्रजा इत्युक्तेः। तथा च ब्रह्मशब्देन वाच्ययोः प्रकृतयोः अक्षरपुरुषोत्तमयोः कथं वाऽर्थलाभ इति चेतदुच्यते - "जन्माद्यस्य यतः" इति सूत्रस्थवक्ष्यमाणभाष्येण जगद्धेतुत्वस्य निमित्तोपादानसाधारण्येनोभयोः स्वीकृतत्वात् प्रकृतार्थसिद्धिः। एतच्चानुपदमेव[२०] स्फुटीभविष्यति। तेन अक्षरब्रह्म परब्रह्म इत्युभयपरत्वेऽपि नासङ्गतिः। एतदेव मनसि निधाय वाक्यपदीयब्रह्मकाण्डव्याख्यायाः प्रत्येकार्थप्रकाशिकायाः

---

१५. (पा. सू. २.३.६५) (पाणिनिः १७)
१६. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ४)
१७. (पा. धा. ७३५) (बृहद्धातुकुसुमाकरः १७१)
१८. (पा. धा. ७३६) (बृहद्धातुकुसुमाकरः १७१)
१९. (उणादिसूत्रम् ४.१४५) (श्रीमद्भट्टोजिदीक्षितः ४६४)
२०. जन्माद्यस्य यतः इति सूत्रस्थभाष्ये हेत्वर्थे पञ्चमी इति विचारप्रसङ्गे। (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् १३)

कर्ता श्रीद्रव्येशझामहोदयोऽपि धातूनामनेकार्थत्वं स्वीकृत्य[२१] बृंहयति पालयतीति स्वचैतन्यसम्पादनद्वारा जगद्व्यवहारस्थितिनियामकमित्यर्थपरतयाऽन्तर्भावितण्यर्थेनैव व्युत्पत्तिं प्रदर्शयति। एवञ्च बृहत्त्वस्य बृंहणस्य वा वर्धनत्वेन व्यापकत्वेन वा अक्षरब्रह्मणि समन्वयः।

यद्वा बर्हति बृंहति = वर्धते इति ब्रह्म इति वा स्वीकर्तव्यम्। अनेनान्तर्भावितण्यर्थगर्भित-व्युत्पत्तेरर्थगौरवग्रस्तता स्वीक्रियेत चेत्तदपि निरस्यते। अस्मिन् पक्षे नित्यं वर्धमानत्वं नाम क्षराभावः क्षयाभावो वा लक्ष्यते क्षयं क्षरं वा न याति नित्यं वर्धत इति अक्षरं ब्रह्मेति सिद्धं व्यपदिष्टम्। अत एव अमरकोषव्याख्यायां सुधाख्यायामपि अन्तर्भावितण्यर्थगर्भितव्युत्पत्तिं प्रदर्श्य ततो **बर्हति बृंहति वर्धते इति** वा द्वितीया व्युत्पत्तिः प्रदर्शिता।[२२] अनेन स्वामिनारायणभाष्योक्तार्थोऽपि सङ्गच्छते। अत्रोक्तार्थ एव प्रोक्तः कठोपनिषत्स्वामिनारायणभाष्येऽपि "बृंहति बर्हति वेति ब्रह्म। एवं स्वरूपतः स्वाभावतो गुणतश्च बृहत्त्वाद् बृंहणत्वाच्च ब्रह्मशब्दोऽयमक्षरं ब्रह्माभिधत्ते। बृहत्त्वमुत्कर्षः। तस्य च कस्मादित्यनुयोगिसापेक्षत्वात् परमात्मातिरिक्तसर्वजीवेश्वरमायाऽक्षर-मुक्तेभ्योऽतिशयोत्कर्षविशिष्टमक्षरं ब्रह्मेति ब्रह्मशब्दार्थः।"[२३]

नन्वेवमपि पुरुषोत्तमब्रह्मणि कथं समन्वय इति चेदुच्यते – अन्तर्भावितण्यर्थव्युत्पत्तौ तु वर्धयति इत्यस्य वर्धितुं प्रेरयति इति विवरणेनापि सङ्गतिः। यतो ब्रह्मणोऽपि कारणमाधारः प्रेरकश्चाङ्गीकृतः परब्रह्म पुरुषोत्तमो नारायणः अक्षरपुरुषोत्तमदर्शने। अत्र प्रेरकः परब्रह्म पुरुषोत्तमो नारायणः, प्रेर्यमक्षरं ब्रह्म। प्रेरणा तु सकलचराचरव्याप्यविषयिणी। अत एव सर्वापेक्षया व्यापकत्वं बृहत्त्वं तस्य संभवि। प्राह चाक्षराधिपतिः सहजानन्दोऽपि "तदिदं ब्रह्म प्रकृतिपुरुषादिसर्वेषामपि कारणमाधारः सर्वेष्वन्तर्यामिशक्त्या व्यापकं च" इत्यादिना तस्य व्यापकत्वम्।[२४]

द्वितीयव्युत्पत्तावपि बृहत्त्वं बृंहणत्वञ्च पुरुषोत्तमस्य स्वतः सिद्धम्। बर्हति बृंहति उत्कर्षं प्राप्नोतीति व्याख्यानात्, धातूनामनेकार्थत्वाच्च। उत्कर्षश्च किमपेक्ष इति चेदक्षरापेक्षयाऽस्य परब्रह्मण उत्कृष्टत्वम्। तत्त्वञ्च **अक्षरात्परतः परः, अक्षरादपि चोत्तमः** इत्यादिमुण्डक-गीताद्युपनिषदुक्तिषु निरूपितम्। उक्तञ्चान्यत्रापि – **महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चिदि**त्यादिना कठोपनिषदि, **यस्मात्परं नापरमस्ति किञ्चिद्** इति श्वेताश्वतरोपनिषदि च। एवमक्षरात् पुरुषोत्तमस्योत्कृष्टत्वनिरूपकाणि बहूनि सन्ति प्रमाणानि तत्र तत्रोपनिषत्सु। अत एव एतदुभयसाधारण्येन स्वामिनारायणभाष्यकाराः ब्रुवन्ति "तथा ह्येतयोरेव नित्यं स्वरूपस्वभावगुणतश्च सकलजीवेश्वरमायातन्मुक्तेभ्यो बृहत्त्वाद् बृंहणत्वाच्च मुख्यवृत्त्यैव ब्रह्मशब्दव्यपदेशः"[२५] इति। एवञ्च सिद्धमनेन बृहत्त्वरूपोत्कर्षस्योभयवृत्तित्वम्। तथा हि

२१. (वाक्यपदीयब्रह्मकाण्डव्याख्या प्रत्येकार्थप्रकाशिका) (भर्तृहरिः ६)
२२. (अमरकोषव्याख्या सुधा प्रथमकाण्डम्) (अमरसिंहः ८)
२३. (कठोपनिषत्स्वामिनारायणभाष्यम्) (साधुभद्रेशदासः, ईशाद्यष्टोपनिषत्स्वामिनारायणभाष्यम् १०४)
२४. (कठोपनिषत्स्वामिनारायणभाष्यम्) (साधुभद्रेशदासः, ईशाद्यष्टोपनिषत्स्वामिनारायणभाष्यम् १०४)
२५. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ४)

अक्षरब्रह्मणः परमात्मातिरिक्तसर्वजीवेश्वरमायाक्षरमुक्तेभ्यः, पुरुषोत्तमस्य त्वक्षरादप्युत्कृष्टत्वम्, ततोऽपि परत्वात्। तदेत्सर्वं तत्त्वं व्याख्यातं स्वामिनारायणभाष्ये तत्र तत्र यथा "**पुरुषात्** परमपुरुषात् सहजानन्दात् **किञ्चित्** किमपि **परं** प्रबलं तत्त्वान्तरं **न** वर्तते"[२६] इत्यादिना।

अनेन "अथातो ब्रह्मजिज्ञासा" इत्यत्र ब्रह्मणोर्जिज्ञासा इत्यत्र षष्ठीद्विवचनान्तेन समासविग्रहोक्तिः, कर्मषष्ठ्या समासो ब्रह्मशब्दव्युत्पत्तिश्चेत्येते विषयाः पाणिनीयप्रमाणेन यथायथं सम्यक् प्रतिपादिताः स्वामिनारायणभाष्यकारैः। स्पष्टमेवात्र पाणिनीयस्य स्वामिनारायण-भाष्यार्थविवरणेऽनुकूलत्वञ्च।

## जन्माद्यस्य यतः १-१-२

सूत्रमिदं व्याचक्षाणाः स्वामिनारायणभाष्यकाराः "जन्मादि अस्य यतः इति पदच्छेदः। **अस्य** प्रवर्तमानसर्वानुभूतिविषयताव्याजेन जगतः पारमार्थिकत्वप्रख्यापनायेदमा निर्देशः। अद्भुततर्कातीताऽचिन्त्यविविधाकृतेरसंख्यजीवेश्वरलक्षणचेतनजातैर्जडरूपप्रकृतिपरिणाम-जातैश्च भोक्तृभोगभोग्यैः संभृतस्य व्याकृतनामरूपस्य नैककोटिब्रह्माण्डरूपस्य प्रपञ्चस्य। भूतभव्यावप्युपलक्ष्येते। सकलप्रपञ्चस्येत्यर्थः। **जन्मादि** गुणातीतानन्दः सहजानन्द इत्यादिवत् तद्गुणसंविज्ञानो बहुव्रीहिः। जन्म आदि यस्य तज्जन्मादि उत्पत्तिस्थितिप्रलयमित्यादि... (ततोऽग्रे) **यतः यच्छब्दाद्धेत्वर्थे पञ्चमी। हेतुत्वं चेह निमित्तोपादानसाधारणम्। 'पञ्चम्यास्तसिल्' (पा. सू. ५.३.७)। याभ्यामित्यर्थः।"**[२७] इति प्रतिपादयन्ति।

### जन्माद्यस्य यतः इत्यत्र अस्य इत्यनेन कस्य परामर्शः इति विचारः

अत्रेदं वक्तव्यम् – "जन्माद्यस्य यतः" इति सूत्रे **अस्य** इति **यतः** इति च पदद्वयं हि क्रमशः इदमा यदा इति सर्वनामशब्दाभ्यां निष्पन्नम्। सर्वनामशब्दाश्च स्वभावतः सर्वानपि पदार्थानभिधातुं समर्थास्तर्हि प्रकृते इदन्त्वेन यत्त्वेन वाच्यं च किं स्यात्? अत्रोच्यते – सर्वनाम्नामुत्सर्गतः पूर्वपरामर्शित्वं, प्रधानपरामर्शित्वं बुद्धिस्थपरामर्शित्वञ्चेति नियमः। यतः इति हेत्वर्थपञ्चम्या (इदमनुपदमेव स्पष्टीक्रियते) यच्छब्दः प्रकृते कारणपर इति निर्धार्यते तस्मात् कारणपरयच्छब्देन पूर्वसूत्रोपात्तत्वाद् ब्रह्मणोः परामर्शः क्रियते, तथापि प्रकृतसूत्रे कार्यत्वेन इदमा जगत एव परामर्शः कथम्? न हि पूर्वसूत्रे जगतः प्रस्तावोऽपि वर्तते, न हि जगतोऽत्र क्वचित् प्राधान्यञ्च निरूप्यते तेन इदमा जगदेव परामृष्टव्य इति चेदुच्यते बुद्धिस्थपरामर्शरूपहेतुना इदमा जगत उपस्थितिः। यतः प्रत्यक्षादिना सिद्धं हि जगद् न कथमपि बुद्धिविषयतां जहाति। अत एव कार्यत्वेनोपस्थितं प्रति कारणस्य प्रसङ्गे जिज्ञास्यमानयोः ब्रह्मणोः लक्षणाय प्रवृत्तस्य सूत्रस्यास्य

---

२६. (कठोपनिषत्स्वामिनारायणभाष्यम्) (साधुभद्रेशदासः, ईशाद्यष्टोपनिषत्स्वामिनारायणभाष्यम् १३१)

२७. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् १३)

सङ्गतिरपि भवति। किञ्च कार्यकारणे परस्परं सापेक्षपदार्थौ। न स्याद्यदि जगत उपस्थितिः तदा को वा प्रसङ्गोऽपि तत्कारणस्य। अत एव यतः इति हेत्वर्थपञ्चम्या तयोः कारणत्वमुच्यते तत्किमपेक्षमित्याकाङ्क्षायां जगत एव सन्निकृष्टत्वात्तदुपस्थितिः। अत एव इदमा हि तस्य निर्देशोऽपि युज्यते। तदुक्तं –

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्॥[२८]

इति वचनानुसारेण इदमा हि सन्निकृष्टस्यैव परामर्शः कर्तव्यस्तर्हि स पदार्थः प्रकृते जगदेवेति निश्चप्रचम्। सन्निकृष्टत्वन्तु कार्यकारणभावेन सिद्धमिति प्रागेव निरूपितम्। एतदेवोपरिष्टात् प्रत्यपीपदन् स्वामिनारायणभाष्यकाराः "प्रवर्तमानसर्वानुभूतिविषयताव्याजेन जगत इत्यारभ्य व्याकृतनामरूपस्य नैककोटिब्रह्माण्डरूपस्य प्रपञ्चस्य"[२९] इत्यन्तेन ग्रन्थेन।

**यतः इति हेत्वर्थपञ्चमीविचारः**

**ननु** ब्रह्मणो जिज्ञासेति एकवचनान्तेन विग्रहे यतः इति एकवचनोपपत्तिः सुशका। परं ब्रह्मणोर्जिज्ञासेति द्विवचनान्तेन विग्रहे कथं सोपपाद्येति चेदत्रोच्यते – पञ्चम्यन्तेभ्यः किमादिभ्यस्तसिल्वा स्यादित्यर्थकेन "पञ्चम्यास्तसिल्"[३०] इति सूत्रेण पञ्चम्यर्थे विहितस्य तसिलन्तस्य, यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यादित्यर्थके "तद्धिताश्चासर्वविभक्तिः"[३१] इति सूत्रे **तसिलादयः प्राक् पाशपः** इत्यादिपरिगणनाद् अव्ययत्वात् सर्वेषामपि वचनानां वक्तुं सुलभत्वाद् द्विवचनान्तविग्रहे दोषाभावाच्च। अनेनात्रापि पाणिनीयप्रमाणोपन्यासः स्फुटं प्रतीयते।

अन्यच्चोक्तं स्वामिनारायणभाष्ये हेतुत्वमिह निमित्तोपादानसाधारणमिति तत्तुल्यतयैव प्रौढमनोरमायामपि सम्यग् व्यचारि भट्टोजिना पञ्चमीप्रकरणे "जनिकर्तुः प्रकृतिः"[३२] इति सूत्रं व्याचक्षाणेन। अनेन सूत्रेण जायमानस्य हेतोरपादानं संज्ञा विहिता। तत्र प्रकृतिशब्देन हेतुरुच्यते। एवं हि 'पुत्रात् प्रमोदो जायत' इति उदाहरणप्रदर्शनात् प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतमनूद्य महाभाष्यकृन्मते तु 'गोमयाद् वृश्चिका जायन्ते, गोलोमाविलोमभ्यो दूर्वा जायन्ते' इत्युदाहृतत्वाद् उपादानमात्रपरमिति व्याख्याय तदुभयसाधारण्येन 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्युदाहारि। "ब्रह्मा = हिरण्यगर्भः। स च हेतुरेव न तूपादानम्। किं च ब्रह्म =

---

२८. (प्रौढमनोरमा, हलन्तपुंलिङ्गप्रकरणम्) (भट्टोजिदीक्षितः ५८६)
२९. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् १३)
३०. (पा. सू. ५.३.७) (पाणिनिः ५७)
३१. (पा. सू. १.१.३८) (पाणिनिः ०३)
३२. (पा. सू. १.४.३०) (पाणिनिः ०९)

मायाशबलम्, तद्धि सर्वकार्योपादानम् इति वेदान्तसिद्धान्तः।"[३३] अत एव "यतो वा इमानि भूतानि जायन्ते" इति श्रुतौ 'यतः' पञ्चमी दृश्यते। एवमत्रापि स्वामिनारायणभाष्ये प्रतिपाद्यते – "याभ्यां सकलजीवेश्वरमायातन्मुक्तव्यापकाभ्यां तन्नियामकाभ्यामचिन्त्याऽलौकिकशक्तिभ्यां दिव्याऽगणितकल्याणगुणगणशालिभ्यामक्षरपुरुषोत्तमाभ्यामस्य प्रपञ्चस्योत्पत्तिस्थितिप्रलयाः प्रभवन्ति..." इत्यादिना। अनेन प्रकृतभाष्येण भाष्यकृतां यथाप्रतिज्ञं नान्यवेदान्तादिसिद्धान्तस्यापि विरोधः क्वचिदित्यपि सर्वसामञ्जस्येन स्पष्टम्। व्यक्तञ्चानेन निमित्तोपादानसाधारणोपपादनपर-स्वामिनारायणभाष्येण भाष्यकाराणां पाणिनीयसरण्यनुसारं स्वसिद्धान्तप्रतिपादनकौशलमपि।

## तत्तु समन्वयात् १-१-४

**ननु** "जन्माद्यस्य यतः"[३४] इत्यत्र 'यतः' इत्यनेन पाणिनीयप्रमाणबलाद् याभ्यामित्यर्थस्य सुलभत्वादपि "तत्तु समन्वयात्"[३५] इत्यत्र 'तद्' इत्यस्य सर्वनामसंज्ञकत्वात् सर्वनाम्नां च पूर्वपरामर्शत्वस्य औत्सर्गिकत्वनियमाद् "जन्माद्यस्य यतः"[३६] इति पूर्वसूत्रे 'यतः' इत्यनेन द्वयोर्वचनत्वात् प्रकृते 'तद्' इत्यनेन कथं द्विवचनान्तस्य लाभ इति चेत् – तदित्यनेन जगत्कारणत्वमिति गृहाण। तत्त्वञ्च प्रकृतसूत्रे स्वामिनारायणभाष्ये – "तद् निखिलजगत्-प्रभवादिहेतुत्वं शास्त्रयोनित्वं चाक्षरब्रह्मणः परब्रह्मणश्च सम्भवत्येव। वेदान्तवाक्यानां तत्र **समन्वयाद्** मुख्यवृत्त्याऽन्वयादिति शब्दार्थयोजना।"[३७] **अयं भावः** – पूर्वत्र हि सूत्रे द्वयोरपि ब्रह्मणोर्जगत्कारणत्वस्य उक्तत्वादुभयोरपि जगत्कारणत्वेन समुच्चितत्वाद् नात्र काचित् क्षतिः तच्छब्देन जगत्कारणत्वस्वीकारे, समुच्चयेन चोभयोरपि सङ्गृहीतत्वाच्च। एतद्धि सर्वनाम्नामुत्सर्गतः पूर्वपरामर्शित्वरूपव्युत्पत्तिबलाल्लब्धम्।

## आनन्दमयोऽभ्यासात् १-१-१३ विकारशब्दान्नेति चेन्न प्राचुर्यात् १-१-१४

तत्रानन्दमयाधिकरणस्थम् "आनन्दमयोऽभ्यासात्"[३८] इति प्रथमसूत्रं व्याचक्षाणाः स्वामिनारायणभाष्यकाराः भूमिकामारचयन्ति – "तैत्तिरीये तावदानन्दवल्ली समाम्नाता। तत्र जगत्कारण-वाक्यं श्रूयते। तच्चानन्दमयशब्दव्यपदेश्यत्वं जीवानामीश्वराणां वा चेतनानामपि न सम्भवत्यपि तु परमात्मन एवेतीह सोहापोहं प्रतिपादयिष्यते"[३९] इत्यादिना। ततः

---

३३. (प्रौढमनोरमायाः कारकप्रकरणे 'जनिकर्तुः प्रकृतिः' इति सूत्रे) (भट्टोजिदीक्षितः ९२५)
३४. (ब्र. सू. १.१.२) (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् १२)
३५. (ब्र. सू. १.१.४) (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् २४)
३६. (ब्र. सू. १.१.२) (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् १२)
३७. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् २४)
३८. (ब्र. सू. १.१.१३) (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ३७)
३९. (आनन्दमयाधिकरणभूमिका।) (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ३७)

"आनन्दमयोऽभ्यासात्"[४०] इति सूत्रं व्याचक्षाणास्तत्तच्छ्रुतिवाक्यैर्जगत्कारणत्वं प्रमाणयन्तः प्रकरणादानन्दमयशब्दव्यपदिष्टः परमात्मैव न तु जीवो वेश्वरो वा। कुतः? अभ्यासाद् असकृदुक्तेः इत्यादिरीत्या सप्रमाणमक्षराधिपतिरेव आनन्दमयशब्दवाच्य[४१] इति सिद्धान्तयित्वा "विकारशब्दान्नेति चेन्न प्राचुर्यात्"[४२] इति सूत्ररीत्या आनन्दमयशब्दे श्रूयमाणस्य मयटो विकारार्थत्वमाशङ्कामनूद्य निराकुर्वन्ति स्वोपज्ञव्याख्यया। सोऽयं सिद्धान्तः स्वामिनारायणभाष्ये "यद्यपि सत्यज्ञानानन्तलक्षणस्याक्षरब्रह्मणोऽप्यानन्दोऽनन्त एव इत्यारभ्य आनन्दगुणप्रचुरः परमात्मेति सिद्धम्। एवमेव विज्ञानमय इत्यत्रापि विज्ञानगुणप्रचुरत्वमर्थो विज्ञेय"[४३] इत्यन्तेन ग्रन्थेनोपस्थापितः।

अत्रास्य व्याख्यानस्य पाणिनीयदिशा युक्तत्वं प्रदर्श्यते। तथा हि "तत्प्रकृतवचने मयट्"[४४] इति पाणिनिसूत्रेण भावेऽधिकरणे वा ल्युट् विधीयते। भावे प्रकृतमन्नमन्नमयम्। अपूपमयी इत्याद्युदाहरणानि। द्वितीयेऽन्नमयो यज्ञः। अपूपमयं पर्व इत्याद्युदाहरणानि। अत्र प्राचुर्येण प्रस्तुतम् = बहुलतया उपस्थितं प्रकृतशब्देन विवक्षितम्। तथा च भावे = प्रकृतस्य बोधने सति प्राचुर्यविशेषणक-वस्तुवृत्तेः प्रथमान्तात् स्वार्थे मयडिति फलति। अत्र प्राचुर्यविशिष्टं वस्तु प्रकृतेरर्थः। प्रत्ययस्तु तद्द्योतकः। अधिकरणार्थे तु प्राचुर्यविशेषणकं यद्वस्तु यस्मिन्नुच्यते तदधिकरणे वाच्ये तादृशवस्तुवृत्तेः शब्दाद् मयड् वाचक इति फलति। अत्र पक्षे प्राचुर्यविशिष्टमुच्यमानं वस्तु प्रकृत्यर्थः। तदधिकरणं प्रत्ययार्थः। एवञ्च प्रकृते इदं विचारणीयं यत् परमात्मैव आनन्दमयशब्दवाच्य इति कस्मिन्नर्थे सिध्यतीति। यदोच्यते प्राचुर्यविशेषणकवस्तुवृत्तेः प्रथमान्तात् स्वार्थे इति तर्हि प्राचुर्यविशेषणकवस्तुवृत्तिरानन्द इति स च प्राचुर्यविशिष्ट प्रचुरतया प्रस्तुत इति तदेवात्र द्योत्यमितिकृत्वा परमात्मावाचकानन्दशब्दात् स्वार्थे मयट्। अनेन आनन्दः = आनन्दमयः (प्रचुरतया प्रस्तुत आनन्दः) = ब्रह्म अभ्यासात् = असकृदुक्तेः परमात्मनि एवानन्दशब्दस्य बहुकृत्वा प्रयोगाद् इति व्याख्यातम्।

एवन्तर्हि द्वितीयपक्षे अधिकरणार्थे मयटि कथं व्याख्येयम्? ब्रह्मण आनन्दरूपत्वात् स्वाधिकरणत्वाभावादिति चेदुच्यते – अत्र पक्षे राहोः शिरः इत्यत्र इव व्यपदेशिवद्भावेन ब्रह्मणोऽधिकरणत्वं सुवचम्। एतादृशार्थे स्वीकारे "आद्यन्तवदेकस्मिन्" इति सूत्रस्थं महाभाष्यं प्रमाणम्। तत्र हि भाष्ये राहोः शिरः इत्यादौ एकस्मिन्नसहाये मुख्यव्यवहारसाधनाय व्यपदेशिवद्वचनमाश्रितम्। तत्र राहुरेव शिरः पदार्थ इतिकृत्वा राहोः शिरः इत्यवयवावयविभावाभावात् षष्ठी न प्राप्नोतीत्यतो व्यपदेशिवद्भावेन षष्ठ्युपपादनं

---

४०. (ब्र. सू. १.१.१३) (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ३७)
४१. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ३८-३९)
४२. (ब्र. सू. १.१.१४) (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ३९)
४३. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ३८-३९)
४४. (पा. सू. ५.४.२१) (पाणिनिः ६०)

कृतमिति पस्पशायां "सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः" इति वार्तिकव्याख्यानपरकैयटग्रन्थे[४५] स्पष्टमेतत्। तद्वदत्राप्यानन्दरूपब्रह्मणः स्वाधिकरणत्वासम्भवेऽपि व्यपदेशिवद्भावेनाधि-करणत्वमुपपादयितुं शक्यमेव। तेन सूत्रार्थस्य द्वितीयप्रकारे प्राचुर्यविशेषणकं यद्वस्तु = प्रचुर आनन्दः यस्मिन्नुच्यते आनन्दरूपब्रह्मणि तदधिकरणे आनन्दाधिकरणे ब्रह्मणि वाच्ये तादृशवस्तुवृत्तेः परमात्मवाचकानन्दशब्दाद् मयट् सिध्यत्येव। अतो वयन्तु व्याकरणदिशा पक्षद्वयेऽपि आनन्दमयशब्देन परमात्मवाच्यत्वे न किञ्चिद्बाधकं पश्यामः। अत्रार्थे भट्टनागेशोक्तिरपि अस्मदनुकूलैव। तत्र लघुमञ्जूषायां वृत्तिविचारे तद्धितवृत्तिनिरूपणावसरप्रसङ्गे प्रकृतसूत्रव्याख्याने[४६] आनन्दमयो ब्रह्म, चिन्मयं ब्रह्मेत्यादावयमेव मयट्। प्राचुर्यन्तु तत्र निर्धर्मकत्वमेव व्यावहारिकमपरिच्छेद्यत्वं च। अनन्तत्वप्रतिपादकश्रुतेः। अत्र व्यावहारिकमित्यस्य वस्तुदेशकालकृत-मित्यर्थः। चः समुच्चये। व्यावहारिकमिति मध्यमणिन्यायेन निर्धर्मकत्वमिति अपरिच्छेद्यत्वमिति उभयत्रान्वेति। तेन व्यावहारिकमपरिच्छेद्यत्वं = वस्तुदेशकालकृतपरिच्छेद्यत्वरहितम्, निर्धर्मकत्वमिति = वस्तुदेशकालकृतधर्मत्वरहितमिति च ब्रह्मणि समुच्चीयते। एवञ्च सिद्धमनेन ब्रह्मणो निर्विकारत्वं सर्वोपाधिरहितत्वञ्च। अनेनैतादृशः ब्रह्मपर्यायानन्दमयव्यपदेशी परमात्मैव भवितुमर्हति स एव च सहजानन्दः सर्वानन्दमूलभूतोऽक्षराधिपतिर्व्याख्यातः स्वामिनारायणसिद्धान्तभाष्ये। अत्र सिद्धान्तनये ब्रह्मशब्दवाच्यत्वेनाक्षरपरब्रह्मणोः स्वीकृतत्वात् किमिदमानन्दपदवाच्यमक्षरं ब्रह्म न भवति वेत्याशङ्कापि स्वामिनारायणभाष्ये कृत्वाचिन्तान्यायेन निराकृता तदुक्तम् – "यद्यपि सत्यज्ञानानन्तलक्षणस्याऽक्षरब्रह्मणोऽप्यानन्दोऽनन्त एव तथापि जीवेश्वरमायातन्मुक्तादिसर्व-परतस्तस्मात् केवलं परमात्मन एव परत्वात् तदानन्दपुरस्कारेण तदक्षरादिसर्वसमुत्कृष्टपरमात्म-सहजानन्दाऽऽनन्दं निरूपयितुं स उदाहृतः। स्वरूपतः सच्चिदानन्दरूपस्य निर्विकारस्य जीवेश्वरात्मन आनन्दविकारत्वस्याप्यसम्भवादित्यानन्दगुणप्रचुरः परमात्मेति सिद्धम् इति।"[४७] अनेन स्पष्टमत्र आनन्दमयशब्दस्थमयटो विचारप्रसङ्गे स्वामिनारायणभाष्ये पाणिन्युक्तमेवादृतमिति।

## भूमा संप्रसादादध्युपदेशात् १-३-८

तत्र भूमाधिकरणे "भूमा संप्रसादादध्युपदेशात्" इति सूत्रव्याख्याने भूमशब्दवाच्यं परब्रह्मैवेति तदर्थं भूमाधिकरणे स्वामिनारायणभाष्ये परब्रह्मणि भूमशब्दसमन्वय उपक्रमोपसंहाराभ्यामित्थं दर्शितः[४८] "इत्थमुद्गीयते छन्दोगैः 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स

४५. (पस्पशाह्निकम्) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) प्रथमो भागः ७९)
४६. (वृत्तिविचारे तद्धितवृत्तिनिरूपणम्) (नागेशभट्टः १५६०)
४७. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ४०)
४८. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ९२-९५)

भूमा' (छा. ७.२४.१) इति। अत्र संशयः। वैपुल्यार्थभूमशब्दव्यपदिष्टः किं प्राणो जीवात्मोताऽक्षरं ब्रह्माऽऽहोस्वित्परमात्मेति। ...इत्थमुपक्रमोक्तात्मशब्देन व्यपदिष्टः एव परमात्मा प्राणाख्य-प्रत्यगात्मब्रह्मरूपत्वसम्पत्ति-पूर्वकोपासनार्हः सत्यशब्दवाच्यः सुखरूपो भूमशब्देनाभिहित इति भूमा परमात्मैवेति सिद्धम्''[४९] इत्यन्तेन ग्रन्थेन। एतन्मध्ये स्वामिनारायणभाष्यकृद्भिः पाणिनीयसम्मतां भूमशब्दव्युत्पत्तिं प्रदर्श्य समन्वयः प्रदर्शितः। तद् यथायथं विचारयामः। तथा हि - भूमशब्दो वैपुल्यार्थः। पृथ्वादिगणपठिताद् बहुशब्दात् ''पृथ्वादिभ्य इमनिज्वा''[५०] इत्यनेनेमनिचि ''बहोर्लोपो भू च बहोः''[५१] इति प्रकृतिप्रत्ययविकृतौ व्युत्पन्नो भूमशब्दः[५२]। अस्य ''यो वै भूमा तत्सुखं नाल्पे सुखमस्ति,''[५३] ''यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्''[५४] इत्यल्पप्रतियोगिसान्निध्याद् वैपुल्यार्थं बहुत्वमिष्यते। स चाऽयं भूमा वैपुल्यगुणविशिष्टः परमात्मैव। कस्मात्। सम्प्रसादादध्युपदेशात् साक्षात्कृत्य ब्रह्माऽक्षरगुणान् सम्यक् प्रसीदतीति सम्प्रसादो ह्यत्र साक्षादक्षरब्रह्मसाधर्म्यसम्पन्नो ब्रह्मरूप आत्मोच्यते''[५५] इत्यादि।

अत्र या व्युत्पत्तिर्भूमशब्दस्य दर्शिता सा तावद् यथापाणिनीयमेव। अत्र प्रकृतिभूतो बहुशब्दो हि वैपुल्यवाची यच्च प्रत्ययसन्निधानेन बहुत्वमभिधत्ते। तच्च बहुत्वं किमपेक्षमिति अल्पप्रतियोगिसाकाङ्क्षतया ''यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्''[५६] इति श्रुतिबलाद् मर्त्यपदवाच्यमरणधर्मा मनुष्यः जीवमात्रमिति। किञ्चास्य भूम्नोऽक्षरब्रह्मापेक्षयापि उत्कृष्टत्वाद् न तदक्षरं भूमशब्दव्यपदेशि। अत एवाग्र उपसंहारभाष्ये[५७] ''तस्यैव ततो भूमशब्दवाच्यस्य सुखरूपस्य परमात्मनः स्वरूपं कीदृशमिति विशदयन्नाह 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा'[५८] इति। अस्याऽयमर्थः। यत्र यस्मिन्नक्षराधिपतौ ब्रह्मरूपत्वसम्पत्तिपूर्वकं साक्षात्कृते सति स ब्रह्मरूपः परमात्मोपासकस्तत्परमात्म-सहजानन्दपरमानन्दसुखसागरे निमग्नस्तद्दिव्यस्वरूपमात्रलीनसकलस्ववृत्तिः संस्तस्मादेव हेतोः नान्यत् तत्परमात्मानं विहायाऽन्यत् किमपि न पश्यति विद्यमानं सदपि परमात्मपरायणत्वान्न

४९. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ९२)

५०. (पा. सू. ५.१.१२२) (पाणिनिः ५४)

५१. (पा. सू. ६.४.१५८) (पाणिनिः ८१)

५२. इत्थमत्र प्रक्रिया – अयमनयोरतिशयेन बहुरित्यर्थे वैपुल्यवाचकाद् बहुशब्दाद् इमनिचि अनुबन्ध लोपे, 'बहु' + 'इमन्' इति स्थिते प्रकृतसूत्रेण प्रकृतेः बहुशब्दस्य भूरादेशे, प्रत्ययादेरिकारस्य लोपे 'भू' + 'मन्' इति जाते विभक्तिकार्ये भूमा इति। अयञ्च बहुत्वमभिधत्ते।

५३. (छा. ७.२३.१) (साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३२)

५४. (छा. ७.२४.१) (साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३३)

५५. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ९३)

५६. (छा. ७.२४.१)(साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३३)

५७. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ९५)

५८. (छा. ७.२४.१) (साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३३)

साक्षात्कुरुते। एवमेव नान्यच्छृणोति नान्यद् विजानाति स यत्रेत्यनेन परामृष्ट एवाऽक्षराधिपतिः सकलसुखमयः भूमा भूमशब्दवाच्यः सर्वसमुत्कृष्ट इति। तमेव भूमानमक्षराधिपतिमधिकृत्य पुनः 'स भगवः कस्मिन् प्रतिष्ठित:'[५९] इति पृष्टे 'स्वे महिम्नि'[६०] इति विशेषतः स्वदिव्यविग्रह-विशिष्टनित्यस्वरूपेण धामरूपाऽक्षरब्रह्मण्यवस्थानमुक्त्वा तस्यैव परमात्मनः 'स एवाधस्तात् स उपरिष्टात्'[६१] 'आत्मैवाऽधस्ताद् आत्मोपरिष्टाद्'[६२] इति सर्वान्तर्यमनशक्त्या तत्तच्छरीरकत्वात् तद्व्यापकत्वेनाऽनुसन्धानमुपदिष्टम्। ततश्चान्ते यथोक्तस्वात्मब्रह्मैक्यसंस्कृतपरमात्मोपासने फलमप्याह 'न पश्यो मृत्युं पश्यति'[६३] इति।"[६४] इत्थमुपक्रमोक्ताऽऽत्मशब्देन व्यपदिष्ट एव परमात्मा प्राणाख्यप्रत्यगात्मब्रह्मरूपत्वसम्पत्तिपूर्वकोपासनार्हः सत्यशब्दवाच्यः सुखरूपो भूमशब्देनाऽभिहित इति भूमा परमात्मैवेति सिद्धम् ॥ एवञ्च प्रकतेन समुदितेन व्याख्यानेन स्पष्टं यत् श्रुतिप्रमाणैः भूमशब्देन साधितस्य परमात्मनः आधारोऽपि पाणिनीयः एव।

अनादिमत्परं ब्रह्म... (श्रीमद्भगवद्गीता १३.१२)

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत्परं (अनादि मत्परं) ब्रह्म न सत्तन्नाऽसदुच्यते॥[६५]

इति श्रीमद्भगवद्गीतायाः श्लोकेऽस्मिन् उत्तरार्द्धे "अनादिमत्परम्" इति शब्दो दृश्यते। तस्य चार्थः अविद्यमानं आदिः यस्येति। अस्य व्युत्पत्तिस्तु एवं वक्तव्या - न आदिरनादिः, अनादिरस्यास्ति इत्यर्थे "तदस्यास्त्यस्मिन्निति मतुप्"[६६] इति पाणिन्यनुशासनेन मतुपि अनादिमदिति। परन्त्वत्र स्वामिनारायणभाष्यकृतस्तु **अनादि मत्परम्** इत्यादिरीत्या च्छेदं प्रदर्शयामासुः। तेन च विवक्षितार्थः क इति चेदिदमत्र स्वामिनारायणभाष्यम् – "**अनादि** उत्पत्तिरहितमत एव विनाशरहितं नित्यमित्यर्थः। **मत्परम्** अहं पुरुषोत्तमः परमात्मैव परः स्वरूपस्वभावगुणैश्वर्यादिभिः श्रेष्ठो यस्मादिति मत्परम्। यद्वा दासभावेन परमात्मभक्तिपरायणमिति तदर्थः। इति।"[६७]

"अनादि मत्परम्" इति पाठस्य न्याय्यत्वं प्रकारान्तरेणाऽपि सयुक्तिकमुपपादयितुं शक्यम्। न ह्यत्र शास्त्रेषु क्वापि दृढतरप्रमाणाभावात् स्वकल्पितार्थस्य सिद्धये पाठान्तरकल्पानाया औचित्यमप्यङ्गीक्रियते। शास्त्राणां शास्त्रत्वं तु सप्रमाणं निर्णयजनकत्वादेव सम्भवि, अत एव अनुशासनमिति व्यपदेशस्तत्र सङ्गच्छते। क्वचिदपि शास्त्रे कस्या अपि प्रमाणरहितकल्पानायाः

५९. (छा. ७.२४.१) (साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३३)
६०. (छा. ७.२४.१) (साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३३)
६१. (छा. ७.२५.१) (साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३६)
६२. (छा. ७.२५.२) (साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३७)
६३. (छा. ७.२६.२) (साधुभद्रेशदासः, छान्दोग्योपनिषत्स्वामिनारायणभाष्यम् ३३९)
६४. (साधुभद्रेशदासः, ब्रह्मसूत्रस्वामिनारायणभाष्यम् ९६)
६५. (गी. १३.१२) (वेदव्यासः २०४)
६६. (पा. सू. ५.२.९४) (पाणिनिः ६४)
६७. (साधुभद्रेशदासः, श्रीमद्भगवद्गीतास्वामिनारायणभाष्यम् २७९)

स्वीकारे तु शास्त्राणां शास्त्रत्वस्यैव भङ्गापत्तेः। एवन्तर्हि प्रकृते कृतायाश्छेदकल्पनाया विषयेऽपि केनापि प्रमाणेन भाव्यम्। अस्ति वा तत्र प्रमाणमिति चेद् –

**अत्रैषा पृष्ठभूमिः** – अनादिमद् इति वृत्तं किं नञ्तत्पुरुषगर्भितमतुबन्तं ब्रूते उत नञ्बहुव्रीहिगर्भितमतुबन्तमिति।[६८] नाद्यः। बहुव्रीहिणैव तादृशार्थस्य लाभसम्भवात्। नाप्यन्त्यः। तत्रापि बहुव्रीहिणैव तादृशार्थसिद्धेः। पक्षद्वयेऽपि "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः" इति सर्वशास्त्राङ्गीकृतव्युत्पत्तिविरोधाद् वृत्तिद्वयकल्पनप्रयुक्तगौरवाच्च। अत्र व्युत्पत्तौ कर्मधारय इति वृत्तिमात्रोपलक्षणम्। तर्हि साक्षाद्भगवता कृष्णेनैव प्रयुक्तत्वाच्छब्दस्यास्याप्रामाण्यस्य कथमपि वक्तुमशक्यत्वात् किमत्र सम्प्रधार्यम्? इति चेद् –

**अत्रेत्थं समाधिः** – तत्र हि शब्दानुशासनव्याख्याता भगवान् महाभाष्यकारपतञ्जलिः "प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः"[६९] इति सूत्रे भाष्ये[७०] असुपः इति पदमुद्दिश्य क्रियमाणे प्रश्ने "अथाऽसुप इति, कथमिदं विज्ञायते – असुब्वतोऽङ्गस्येति..." इत्यत्र **असुब्वत** इति प्रायुङ्क्त। तत्र कैयटः असुब्वत इति प्रतीकमुद्धृत्य – न सुब्वदसुब्वदिति नञ्समासः। 'असुप' इत्यस्य बहुव्रीहित्वप्रदर्शनाय[७१] भाष्यकारेण लाघवं नाश्रितम्। तदाश्रयणे हि बहुव्रीहिरेव न्याय्यो न तु मतुबन्तः समासः।[७२] इत्यादिना मतुबन्तस्यायुक्तत्वं सूचयति। पूर्वोक्तव्युत्पत्तेर्विरोधात्। अत एव प्रौढमनोरमायां कारकप्रकरणे आरम्भे दीक्षितस्य 'नीलरूपवत्' इति प्रयोगस्य सार्थकतां प्रदर्शयितुं शब्दरत्नकारः प्रथमं व्युत्पत्तिमिमामुल्लिख्य वृत्तिद्वयकल्पनस्यायुक्तत्वं संसूच्य ततो असुब्वत इति भाष्यप्रयोगेण क्वचिल्लाघवानादरस्यापि सूचनमित्यादिना **नीलरूपवद्** इति प्रयोगोपपत्तिं प्रदर्शयामास।[७३] एतादृशप्रयोगसत्त्वे चायं पातञ्जलप्रयोग एव ज्ञापकम्। अनेन महाभाष्यकृत्कृतप्रयोगप्रमाणेन भगवता श्रीकृष्णेन प्रयुक्ते न काचिदनुपपत्तिः। परमत्रेदमालोचनीयं यन्महाभाष्यकृद्भिस्तु बहुव्रीहेः स्पष्टप्रतीतिरूपबलवत्कारणस्य सत्त्वाद् वृत्तिद्वयाकल्पनामूलकव्युत्पत्तिविरोधप्रयोगेण लाघवमनादृत्य इष्टिः प्रदर्शिता। तेन बलवत्कारणसत्त्व एव तादृशप्रयोगः

---

६८. न आदिरनादिः (नञ्-तत्पु.), अनादिरस्यास्तीति अनादिमदिति मतुबन्तेन आद्ये वचनविवृतिः। अविद्यमान आदिर्यस्येति अनादिः (नञ्-बहु.), अनादिरस्यास्तीति अनादिमदिति मतुबन्तेन द्वितीये वचनविवृतिः।

६९. (पा. सू. ७.३.४४) (पाणिनिः ८३)

७०. (व्याकरणमहाभाष्यम् षष्ठं खण्डम् प्रत्यस्थात्कात्... इति सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) षष्ठो भागः १९८)

७१. असुप इति उच्यमाने सन्देहः किमत्र नञ्-तत्पुरुष उत नञ्-बहुव्रीहिरिति। पक्षद्वयेऽपि समानरूपत्वात्। अतः सन्देहनिवारणाय बहुव्रीहित्वं सूचयितुमेव चात्र लाघवं नाश्रीयते इति तात्पर्यम्। (व्याकरणमहाभाष्यम् षष्ठं खण्डम् प्रत्यस्थात्कात्... इति सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) षष्ठो भागः १९२)

७२. (व्याकरणमहाभाष्यम् षष्ठं खण्डम् प्रत्यस्थात्कात्... इति सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) षष्ठो भागः १९२)

७३. (प्रौढमनोरमा कारकप्रकरणे प्रातिपदिकार्थसूत्रे लघुशब्दरत्ने) (भट्टोजिदीक्षितः ७४१)

कर्तव्य इति ज्ञायते। तावतापि अस्मदादिभिः तादृशबलवत्कारणाभावे न तथा प्रयोगः शक्यः कर्तुम्। अन्यथा सर्वत्राप्येतादृशज्ञापकत्वमाश्रित्य तादृशप्रयोगकरणाच्छास्त्रीयव्युत्पत्तिकृत-नियमानामुच्छेदापत्तिः।

अस्तु प्रकृतमनुसरामः। "अनादि मत्परं ब्रह्म" इति पाठे भाष्यकाराणां व्याकरणशास्त्रप्रागल्भ्यमपि द्रष्टुं शक्यते – तैः अनादिमत्पर इत्यस्य **एका क्रिया द्व्यर्थकरी** इति न्यायमनुसृत्य च्छेदेन प्रकृते कार्यद्वयं साधितम्, एकेन शरेण लक्ष्यद्वयसाधनवत्। तदित्थम् – एकं तु अनादि इत्यत्र बहुव्रीहिराश्रयणेन विवक्षितार्थेन सह भगवदुक्तार्थस्यापि संग्रहणाल्लाघवं सम्पादितम्। यतो योऽयमर्थो वृत्तिद्वययुक्तपदेन उच्यमानः स एव बहुव्रीहिणापि सिध्यतीति पाणिनीयानुशासनेन लाघवमत्र प्रादर्शि। तेन वृत्तिद्वयाकल्पनामूलकव्युत्पत्तिविरोधोऽपि वारित इति द्वितीयं महल्लाघवम्। महत्त्वञ्चात्र वृत्तिद्वयकल्पनाया अन्याय्यत्वात् तादृशप्रयोगेषु ज्ञापकादिना इष्टस्थले प्रयोगस्वीकारः, अनिष्टस्थले च तद्वारणमित्येवम्परसमाधानादिबहुतर-प्रयत्नानां सत्त्वात् तदपेक्षया व्युत्पत्त्यविरुद्धप्रयोगकरणेन लाघवातिशयसम्पादनत्वात्।

एवमपि पाणिनीयानुशासनेन 'अनादि मत्परम्' इत्यादिच्छेदे अनादि इत्यस्य ब्रह्मविशेषणत्वेन अर्थसङ्गतेरपि मत्परमित्यनेन किं विवक्ष्यते इति जिज्ञासिते इदमत्र श्रीस्वामिनारायणभाष्योक्तिः – "**मत्परम्** अहं पुरुषोत्तमः परमात्मैव परः स्वरूपस्वभावगुणैश्वर्यादिभिः श्रेष्ठो यस्मादिति मत्परम्। यद्वा दासभावेन परमात्मभक्तिपरायणमिति तदर्थः।"[७४] अत्र प्रथमेऽर्थे अस्मच्छब्देन पुरुषोत्तमो गृह्यते तस्य अक्षरापेक्षया प्रोक्तगुणादिभिः श्रेष्ठत्वात्। अत्र "पञ्चमी विभक्ते"[७५] इति सूत्रेण निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी विधीयते। अवधित्वं पञ्चम्यर्थः। अत्र "यतश्च निर्धारणम्"[७६] इत्यनुवृत्तेः निर्धारणावधेः निर्धार्यमाणस्य च भेदे यतो निर्धार्यते तत एवेत्यर्थाद् निर्धारणावधेः पञ्चमी प्रवर्तते। यथा माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। अत्र पाटलिपुत्रकावधिकम् (पाटलिपुत्रकेभ्यो निर्धार्यते अतः तस्यावधित्वम्) आढ्यतरत्वं माथुरेषु निर्धार्यते। तस्मात् पाटलिपुत्रकेभ्य इति पञ्चमी ततस्सिद्धा। तथैव प्रकृतेऽपि अक्षरब्रह्मावधिकश्रेष्ठतरत्वं पुरुषोत्तमब्रह्मणि निर्धार्यते चेत् पुरुषोत्तमवाचकाद् अस्मच्छब्दात् पञ्चम्याः असिद्धेः मत्परमिति अनुपपन्नम्। अत एव द्वितीयार्थं प्रति अनुधावनं भाष्यकृतां **यद्वेति**। तदुक्तं यद्वा दासभावेन परमात्मभक्तिपरायणमिति तदर्थः। परन्तु अत्रार्थेऽयं क्लेशः परमिति शब्दात् कथं वा परायणपर्यन्तस्यार्थस्य लाभः? इति।

अतस्तादृशक्लेशापहाराय मार्गान्तरं कल्प्यम्। एवं हि उच्यताम् प्रथमार्थस्य सिद्धौ मद् इति पञ्चमी मास्तु, अहं परः = श्रेष्ठो यस्माद् इति बहुव्रीहिरस्तु। 'अस्मद्' + 'सु पर' +

---

७४. (साधुभद्रेशदासः, श्रीमद्भगवद्गीतास्वामिनारायणभाष्यम् २७९)

७५. (पा. सू. २.३.४२) (पाणिनिः १६)

७६. (पा. सू. २.३.४१) (पाणिनिः १६)

'सु' इत्यवस्थायां "अनेकमन्यपदार्थे"[७७] इत्यनेन समाससंज्ञायां समासत्वात् प्रातिपदिकत्वे सुब्लुकि "प्रत्ययोत्तरपदयोश्च"[७८] इत्यनेन मपर्यन्तभागस्य म-आदेशे दकारस्य चर्त्वे मत्पर इत्यस्मात् पुनः प्रातिपदिकत्वे सुबादिकार्येषु विशेष्यनिघ्नत्वात् क्लीबे **मत्परम्** इति सिध्यति। अतः पाणिनीयेनानुशासनेनात्रापि समाधानस्य वक्तुं शक्यत्वाद् द्वितीयसमाधानपर्यन्तानुधावनस्यानावश्यकत्वाल्लाघवत्वेन प्रशस्यतरमिदं समाधानम्।

वस्तुतस्तु भाष्यकाराणां हृदयेऽपि बहुव्रीहित्वमेव अत एवादौ सिद्धान्तभाष्यमुपस्थाप्य ततः लोकापेक्षं तात्पर्यपरं भाष्यं व्याचक्षते स्वामिनारायणभाष्यकृतः। यथा तत्र महाभाष्याकाराः महर्षिपतञ्जलयोऽपि हलन्त्यमिति सूत्रं व्याचक्षाणाः सिद्धान्तभाष्यमादावुपन्यस्य एकदेशिसमाधानमन्ते प्रकटयामासुः "अथ वा लृकारस्यैवेदं गुणभूतस्य ग्रहणम्। तत्र 'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञा भविष्यति। अथ वा आचार्यप्रवृत्तिर्ज्ञापयति – भवति लकारस्य इत्यंज्ञेति। यदयं णलं लितं करोति।"[७९] एतत्समाधानभाष्यद्वयमपि एकदेशिभाष्यम्। एतयोरेकदेशिभाष्यत्वन्तु प्रकृते अनुपयोगित्वान्नोपन्यस्यते। तर्हि तात्पर्यं क्वेति चेद् मत्परमिति सिद्धान्तत्वेन बहुव्रीहिमुक्त्वा स्वामिनारायणभाष्यकृतां जनसामान्याय तात्पर्यपरवाक्यप्रदर्शनं "यद्वा दासभावेन परमात्मभक्तिपरायणमिति तदर्थः" इति न दोषावहम्, महर्षिपतञ्जलिपद्धतेरिव अत्रापि वक्तुं युक्तत्वात् तथैवाङ्गीकारे औचित्याच्च।

अस्त्विदानीं मत्परम् इति पञ्चमीघटितप्रयोगे तु इदमपि विचारणीयम् – मत्परम् इति व्यासप्रयोग उत समासप्रयोग इति। व्यस्ते समस्तेऽपि समानरूपत्वात्। यदि व्यस्तस्तदा पञ्चमी केन साधनीया? "पञ्चमी विभक्ते" इत्यनेन साधिते तु पूर्वोक्तापत्त्या मद् इति पञ्चम्या एव अनुपपत्तेः। अस्तु तर्हि समस्तमेव तथापि तत्र केन वा समासः साधनीयः? पाणिनीये विभक्तार्थे पञ्चमीसमासविधायकानुशासनस्यैवाभावात्। अतो मत्परमित्यत्र बहुव्रीहिणैव समाधानं वक्तव्यमित्यलम्बहुना।

इत्थं पाणिनीयदिशा अक्षरपुरुषोत्तमदर्शनस्य स्वामिनारायणभाष्यस्य कतिपयस्थलानि यथामति यथाग्रन्थं सप्रमाणं समालोच्यास्मिन् भाष्ये पाणिनीयसंवादः तत्र तत्र स्पष्टं दरीदृश्यते इति प्रकाशितस्य शब्दराशेः युक्तायुक्तत्वविवेचने विद्वांसोऽत्र मानमिति निवेद्य विज्ञाप्य च प्रकृतमत्रोपसंहरामि इति शम्।

---

७७. (पा. सू. २.२.२४) (पाणिनिः १४)

७८. (पा. सू. ७.२.९८) (पाणिनिः ८६)

७९. (व्याकरणमहाभाष्यम् द्वितीयं खण्डम् "हलन्त्यम्" इति सूत्रे) (महर्षिपतञ्जलिः, व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) द्वितीयो भागः १३०)

## सङ्केतसूचिः

| | |
|---|---|
| गी. | श्रीमद्भगवद्गीता |
| छा. | छान्दोग्योपनिषद् |
| ब्र. सू. | ब्रह्मसूत्र |
| पा. धा. | पाणिनीयधातुपाठः |
| पा. सू. | पाणिनीयसूत्रम् |

## सन्दर्भग्रन्थसूचिः

अमरसिंहः. *अमरकोषः - सुधाख्यया रामाश्रमी इत्यपरनामधेयाख्यया व्याख्यया सहितः*. पुनर्मुद्रितसंस्करणम्, राष्ट्रियसंस्कृतसंस्थानम्, २०१८.

नागेशभट्टः. वैयाकरणसिद्धान्तलघुमञ्जूषा. १, पाणिनीयप्रकाशनम्, २००४.

पाणिनिः. अष्टाध्यायी. संस्करण २०१६, चौखम्बा सुरभारती प्रकाशन, २०१६.

बृहद्धातुकुसुमाकरः. पुनर्मुद्रित संस्करण, चौखम्बा विद्याभवन, २०१६.

भट्टोजिदीक्षितः. *प्रौढमनोरमा - अव्ययीभावान्ता - लघुशब्दरत्न-भैरवी-भावप्रकाश-सरलाव्याख्याभिः युता*. ३, चौखम्बा-संस्कृत-संस्थानम्, २००३.

भर्तृहरिः. वाक्यपदीयम् (ब्रह्मकाण्डम्). १, मन्दाकिनीसंस्कृतविद्वत्परिषद्, २००२.

महर्षिपतञ्जलिः. *व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) द्वितीयो भागः*. पुनर्मुद्रितसंस्करणम्, चौखम्बा-संस्कृत-प्रतिष्ठानम्, २०१८.

---. *व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) प्रथमो भागः*. पुनर्मुद्रितसंस्करणम्, चौखम्बा-संस्कृत-प्रतिष्ठानम्, २०२१.

---. *व्याकरणमहाभाष्यम् - (प्रदीपोद्योतसहितम्) षष्ठो भागः*. Edited by भार्गवशास्त्री जोशी, पुनर्मुद्रितसंस्करणम्, चौखम्बा-संस्कृत-प्रतिष्ठानम्, २०१८.

वेदव्यासः. श्रीमद्भगवद्गीता. ३८, गीताप्रेस, सं. २०६८.

श्रीमद्गङ्गेशोपाध्यायः. *तत्त्वचिन्तामणिः - श्रीमथुरानाथतर्कवागीशकृत-'रहस्य'नामकटीकासहितम्*. पुनर्मुद्रित प्रथम संस्करण, चौखम्बा संस्कृत प्रतिष्ठान, १९९०.

श्रीमद्भट्टोजिदीक्षितः. वैयाकरणसिद्धान्तकौमुदी. संस्करण २०१५, चौखम्बा सुरभारती प्रकाशन, २०१५.

साधुभद्रेशदासःमहामहोपाध्यायः. ईशाद्यष्टोपनिषत्स्वामिनारायणभाष्यम्. २, स्वामिनारायण अक्षरपीठ, जुलाई २०१९.

---. छान्दोग्योपनिषत्स्वामिनारायणभाष्यम्. २, स्वामिनारायण अक्षरपीठ, जुलाई २०१२.

---. ब्रह्मसूत्रस्वामिनारायणभाष्यम्. २, स्वामिनारायण अक्षरपीठ, जुलाई २०१९.

---. श्रीमद्भगवद्गीतास्वामिनारायणभाष्यम्. २, स्वामिनारायण अक्षरपीठ, जुलाई २०१९.